एतन्मते तु वाक्येन प्रकरणस्यात्यन्तबाधे "युवं स्थ स्वर्पती इतिद्वयोर्यजमानयोः प्रतिपदं कुर्या"दिति द्वियजमाननिमित्तकत्वेन विहितस्य प्रतिपन्मन्त्रस्य एकयजमानके ज्योतिष्टोमे प्रकरणेन प्रसक्तस्य द्वियजमानककुलायाहीनादौ वाक्येन विनियोग इत्युदाहरणान्तरमेवाङ्गीकर्तव्यम् ।

इदमुदाहरणमपि भाष्यकाराणां संमतमेव ॥

"जाघन्या पत्नीः संयाजयन्ति" इति पत्नीसंयाजप्रकरणे तु पश्ववयवजाघन्याः अङ्गत्वेन विधानं, नतु तस्मिन् निमित्ते उद्देश्ये वा पत्नीसंयाजानां विधानमित्यापणस्थेन तदानीं संपादितेन तेन पत्नीसंयाजोऽनुष्ठातुं शक्यते । नहि निमित्तोद्देश्ययोरिव विधेयस्य प्राप्तिरपेक्षितोपपन्ना वेति नात्र वाक्यप्रकरणयोर्विरोधः ॥

एवंच सति संभवे वाक्येन प्रकरणस्य न बाधः, अन्यथा तु स इति "दीर्घसोमे संतृद्ये धृत्यै" इति विहितस्य संतर्दनस्यापि प्रकरणाविरोधेन ज्योतिष्टोमाङ्गत्वमेव ॥

इष्ट्याद्यपेक्षया दीर्घत्वेन सोमद्रव्यकत्वेन च दीर्घसोमपदस्य ज्योतिष्टोमोऽर्थो भवितुमर्हत्येव ।

अत्रच दीर्घस्य यजमानस्य सोमो दीर्घसोम इति उक्थ्यादिसंस्थान्तरयुक्ते ज्योतिष्टोमे सोमस्य यावदपेक्षं ग्रहणीयत्वेन दीर्घत्वेन दीर्घश्चासौ सोमश्च दीर्घसोम इति वा षष्ठीतत्पुरुषकर्मधारयपक्षावपि प्रकरणाविरोधसंपादनार्थं भाट्टदीपिकायां व्यवस्थापितौ । तथाच नात्रापि प्रकरणाविरोध इति भाष्यकारः ॥

वार्तिककारस्तु—अग्निष्टोमातिरिक्तविवृद्धस्तोमकविकृतावेव निवेशः । अयमाशयः—सोमग्रहणविवृद्ध्यादीनि संस्थाङ्गमेव न ज्योतिष्टोमाङ्गम् । अतः प्रकरणबाधेन वाक्येनैवात्र विनियोग इति—मन्यते ।

एवंच वचनात् दीर्घसोमत्वं अग्निष्टोमातिरिक्तसंस्थानामेव वर्तते नान्येषामिति संतर्दनं विकृतावेव निविशते, नतु प्रकरणोपस्थितेऽपि ज्योतिष्टोमे ॥

इदंच वाक्यं द्विविधं आरभ्याधीतं अनारभ्याधीतं चेति । तत्र अनारभ्याधीतं आरभ्याधीतात् दुर्बलम् । यथा प्रकृतौ पाञ्चदश्यावरुद्धायां अनारभ्याधीतसाप्तदश्यस्य न निवेश इति । "न प्रथमयज्ञे प्रवृञ्ज्यात्" इति निषेधे यदि प्रथमयज्ञपदस्य ज्योतिष्टोमोऽर्थः तर्हि ज्योतिष्टोमाङ्गत्वं प्रवर्ग्यस्य भवत्येवेति प्रकृते प्राकरणिकप्रवर्ग्यनिषेधस्यानारभ्याधीतप्रवर्ग्यविधेश्च भिन्नविषयत्वात् न विरोधः । तथाच सत्यां गतौ लिङ्गेन यथा वाक्यादीनां न बाधः यथा च न श्रुत्या लिङ्गस्य स एवं वाक्येनापि प्रकरणस्य स नास्त्येव ॥

दर्शपूर्णमासप्रकरणाम्नातेन "पूषा प्रपिष्टभागोऽदन्तको हि सः" इति वाक्येन विहितं पूषभागपेषणं कथमपि दर्शपूर्णमासयोरन्वयायोग्यमिति गत्यन्तराभावात् पेषणस्य प्रकरणबाधेन वाक्येन पूषयागाङ्गत्वमेवेति वाक्येन प्रकरणस्य तत्र बाध एव ॥

स च पूषभागः चरुरेव, नतु पुरोडाशादिकम् पशुहृदयादिकमपि वा ॥ यथाच पेषणेऽपि चरोराकारो न विनश्यति नैवं तेन पुरोडाशाद्याकारोऽपि न विनश्यतीति न दोषः ॥

अत्र भागपदार्थो यथा व्यवस्थितश्चरुरेव, तथा पूषयागोऽपि केवलपूषयाग एवात्र विवक्षितः, न तु इन्द्रपूषादियागोऽपीति सिद्धमिदं वाक्यस्य प्रकरणेन विरोधे प्रकरणबाधकत्वमिति ॥

तत्र वाक्यं प्रकरणाद्यविरोधेन सति संभवेऽन्यथा तद्बाधेनेव प्रकरणमपि स्थानाद्यबाधेन सति संभवेऽन्यथा तद्बाधेन विनियोजकम् । यथाऽभिषेचनीयसन्निधिपठितानामक्षविदेवनादीनां राजसूयाङ्गत्वमेव न त्वभिषेचनीयाङ्गत्वम् ॥

विकृतिसन्निधिपठितानामुपहोमादीनां क्रियारूपाणामपि विकृतीनां प्राकृताङ्गैरेव निराकाङ्क्षत्वात् तदितिकर्तव्यतात्वेनान्वयो नोत्थिताकाङ्क्षया भवति, किन्तूत्थाप्याकाङ्क्षयैवेति तेषां स्थानेनैव विनियोगः ।

अनिवृत्तायामेवेतिकर्तव्यताकाङ्क्षायां येषामन्वय उदुम्बरत्वादीनां तेषां वैकृतानामपि क्रियासंबन्धेनेतिकर्तव्यतात्वेनान्वययोग्यानां प्रकरणेनैव विकृतावपि विनियोगः । एवं स्थानसमाख्ययोरपि स्थानेन समाख्याया बाधो द्रष्टव्य इति न्यायप्रकाशादिषु सर्वत्र बहु विस्तृतोऽयं विषयः ॥

विस्तरभयादुपरमन्तो वयमत्रेदमुपपादयामः यत् पूर्वमीमांसाशास्त्रेऽधिकरणानां सर्वेषामप्यन्यादृशः संबन्धो वर्तते । तेषामधिकरणानां पूर्वपक्षन्याया अपि सिद्धान्तन्यायाविरोधेन कुत्रचन विषयवाक्ये योज्यमाना निश्चायका भवन्त्येव । तत एव सूत्रकाराः पूर्वपक्षमपि तत्र तत्र सूचयन्ति, भाष्यकारादयः पूर्वपक्षमपि अधिकरणावयवमभिप्रयन्ति । एते च न्याया वैदिकवाक्येष्विव लौकिकवाक्येष्वपि धर्मविषयेषु मन्वादिकृतेष्वर्थनिर्णयार्थं योजनीयाः । न्यायानुमता एव स्मृतयो धर्मप्रमाणमिति कुत्र कुत्रचन न्यायविरुद्धाः स्मृतयोऽप्रमाणमेव भवन्ति । व्यक्तमिदं भाट्टदीपिकायां कल्पसूत्राधिकरणे । यथाचाऽत्र तृतीयाध्यायगत-निवीताधिकरणान्तस्य भागस्य सम्यगेव सङ्गतिरेवमुपरितनस्यापि भागस्य सा समस्त्येव । तथापि साऽवसरान्तरेऽस्माभिरुपपादयिष्यते । संप्रति प्रारब्धमिमं ग्रन्थविभागमत्रैव समापयामः ॥

इति महामहोपाध्यायश्रीपञ्चापगेशशास्त्रिचरणानां शास्त्ररत्नाकरश्रीवेंकटसुब्बशास्त्रिपादानां चान्तेवासिनो वेदान्तविशारदमहामहोपाध्यायाऽनन्तकृष्णशास्त्रिणः कृतिषु मीमांसाशास्त्रसारः समाप्तः ॥

---

